


SAPTHAGIRI (SANSKRIT)
ILLUSTRATED MONTHLY
Volume:9, Issue:1
April-2022, Price Rs.5/-
No. of pages-24

तिरुमलतिरुपतिदेवस्थानानि

# सप्तगिरिः

सचित्रमासपत्रिका
एप्रिल् २०२२ रू/- ५/-

## ओण्टिमिट्ट श्रीकोदण्डरामस्वामिनः ब्रह्मोत्सवः

एप्रिल् ०९ तः १९ पर्यन्तम्



श्रीरामानुजसहस्राब्दिकसमारोहसन्दर्भे श्री श्री श्री त्रिदण्डि
चिन्नजीयर् स्वामिनः आध्वर्ये तेलङ्गाणराष्ट्रियमुच्चिन्तल् क्षेत्रे
दि.०२.०२.२०२२ तः १४.०२.२०२२ पर्यन्तं प्रत्येकपूजादिकार्यक्रमैः
साकं श्रीरामानुजस्य समतामूर्त्ति विग्रहस्य आविष्कारः सवैभवं कृतः।
अस्मिन् सन्दर्भे ति.ति.दे. पक्षतः फोटो तथा ड्रै फ्लवर् टेक्नालजी
सम्बद्धविषयाः प्रदर्शिताः। तदङ्गत्वेन मुच्चिन्तल् क्षेत्रे तिरुमलदिव्य
देशीयस्वामिने ति.ति.दे.पक्षतः पीताम्बराणि समर्पितवन्तः
ति.ति.दे. पालकमण्डल्यध्यक्षाः। तत्र च ति.ति.दे.
कार्यनिर्वहणाधिकारिणः, ति.ति.दे. अतिरिक्तकार्य
निर्वहणाधिकारिणः, चन्द्रगिरि शासनसभ्याः
तथा ति.ति.दे. पालकमण्डलिसभ्याः
तदितरोन्नताधिकारिणश्च भागग्राहिणः अभवन्।













## गीतामृतम्

पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः।
तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान् स्वबान्धवान्।
स्वजनं हि कथं हत्वा सुखिनः स्याम माधव।।

(भगवद्गीता ३५/१)

अर्जुनः श्रीकृष्णं वदति, ''हे माधव! धनापहान् क्षेत्रापहांश्च एतान् आततायिनः हत्वा वयं पापभाजः एव भवेम। स्वकीयबन्धुजनान् धार्तराष्ट्रान् आचार्यादीन् हत्वा केन प्रकारेण सुखिनः भवेम? न केनापि प्रकारेण। अतः तान् हन्तुं सन्नद्धः नास्मि'' इति।

अग्निदो गरदश्चैव शस्त्रपाती धनापहः।
क्षेत्रदारापहर्ता च षडेते ह्याततायिनः।। (आपस्तम्बे)

## सङ्कीर्तनम्



नमो नमो जगदेकनाथ तव सर्वेश
विमलविशृतलसद्विख्यातकीर्ते ।।नमो।।
राम रघुवरसित राजीवलोचन
भूमिजारमण त्रिभुवनविजय
कोमलाङ्गश्याम कोविदरणरङ्ग
भीमविक्रम सत्यबिरुदप्रवीण ।।नमो।।
दलितदैतेयकोदण्डदीक्षादक्ष
जलजाप्तकुल विभीषणरक्षक
कलितदशरथतनय कौसल्यानन्द
सुलभवानरमुख्यसुग्रीववरद ।।नमो।।
चारुलक्ष्मणभरतशत्रुघ्नपूर्वज
तारकब्रह्मनित्यस्वरूप
धीर श्रीवेङ्कटाधिप भक्तवत्सल
भूरिगुण साकेतपुरनिवास ।।नमो।।

(अन्नमाचार्यसङ्कीर्तनम्)

# शुभकृत्



## सम्पादकीयम्

भारतीयसैद्धान्तिकमणयः वेदव्यासादयः वेदोक्तधर्मप्रचारकाः अवश्यमाचरणीयविषयान् अबोधयन्। तत्रापि अनेकेषां पर्वणां विषये तदाचरणपद्धत्याः विषये च वेदपुराणादिप्रमाणपुरस्सरं उपदिष्टवन्तः इति सुप्रसिद्धिः। तेषु पर्वसु आद्यं वर्तते 'युगादिः' इति पर्व।

तच्च युगादिपर्वदिनं संवत्सरस्य प्रारम्भदिनमिति कारणतः 'संवत्सरादि' इत्यपि व्यवह्रियते। युगादि इत्युक्ते युगस्य आरम्भ दिनमित्यर्थः। कालगणनायां चान्द्रमानं अनुसरन्ति ये, ते सर्वे चैत्रशुक्लप्रतिपदं युगस्य प्रारम्भदिनम् मन्यन्ते। तथैव संवत्सरस्यापि आदिदिनम् इदमेव इति सम्भावयन्ति। अत एव अस्य दिनस्य संवत्सरादि इति नामान्तरम्।

चैत्रशुक्लप्रतिपदि तिथावेव संवत्सरस्य प्रारम्भः इति उक्तं ब्रह्माण्डपुराणे। तथैव अस्मिन् दिने एव ब्रह्मा सृष्टिकार्यम् आरभत इति, देवाः सर्वे स्वीयेषु विधिषु ब्रह्मणा नियुक्ताः इत्यपि तस्मिन्नेव पुराणे दृश्यते। शालिवाहनशकस्य प्रथमं दिनं भवति चैत्रशुक्लप्रतिपद्दिनम्। अत एव इदं शकारम्भदिनमित्यपि उच्यते। अस्माकमार्याः ऋषिमुनयः षष्ठिसंवत्सराणां नामानि यथायोग्यं समर्थितवन्तः 'प्रभवः, विभवः..... ' इत्यादिरूपेण।

तत्र प्रप्रगतवर्षस्य नाम आसीत् यत् तस्मिन् वर्षे प्रपञ्चे सम्भूतस्य विकारस्य सूचकं 'विकारी' इति। तदनु वर्षस्य नाम आसीत् यत्, तस्मिन् प्राप्तविकारेण आगतस्य अतिकष्टस्य सूचकं 'शार्वरी' इति। अथ प्राक्तनस्य नाम आसीत् यत् पूर्वोक्तकष्टकरं सागरं तारयति इति सूचकं 'प्लव' इति। अधुना आगतस्य वत्सरस्य नाम अस्ति यत्, अचिरम् अनुभूतान् विषाण्वादिभिः आयातान् क्लेशान् तीर्त्वा आगतेभ्यः सर्वेभ्यः जनेभ्यः शुभं यच्छति इत्यर्थकं 'शुभकृत्' इति। एषु वर्षेषु कुतः क्लेशाः आपन्नाः? त इदानीं कथं नष्टाः भवन्ति इति ज्योतिषशास्त्रनिपुणैः सूचितमप्यस्ति पञ्चाङ्गेषु। तत्सर्वमपि बहोः कालात् पूर्वमेव अवगम्य एतादृशनामनिर्देशं कृतवन्तः चेत् तत एव अवगन्तुं शक्यते तेषां पूज्यानां ऋषिमुनीनां मेधाशक्तिः कीदृशीति।

भारते आन्ध्र-महाराष्ट्र-कर्णाटकप्रान्तेषु चैत्रशुक्लप्रतिपदेव संवत्सरादिरिति भाव्यते। अतः तस्मिन् दिने एव युगाद्युत्सवं कुर्वन्ति। किन्तु भारते इतरप्रान्तेषु भिन्नभिन्नमासेषु कालेषु इदं पर्व आचरन्ति। अस्य कारणं काशीप्रान्ते बार्हस्पत्यमानादिकालगणनासु वैकल्यम् एकम्। द्वितीयं तु विन्ध्यपर्वतस्य दक्षिणे भागे शालिवाहनशकस्य, उत्तरदिग्भागे विक्रमार्कशकस्य च आचरणप्रभावः। तथापि भारते सर्वत्र स्वल्पदिनव्यत्यासेन अयमुत्सवोऽनुष्ठीयते।

तथाच अस्मिन् पर्वणि विशेषफलदायकानि पूजा-दान-पञ्चाङ्गश्रवणादीनि कार्याणि विधिविहितानि कुर्वन्तः सर्वमङ्गलशुभविग्रहं श्रीश्रीनिवासं नित्यं भजामहे, शुभकृत् नामा वत्सरः सर्वेभ्यः शुभं धारयतु इत्यपि कामयामहे।

**सर्वेभ्यः 'सप्तगिरि' पाठकेभ्यः**
**श्री 'शुभकृत्' नामसंवत्सरस्य हार्दाः शुभाशयाः।**

तिरुमल-तिरुपतिदेवस्थानानां सचित्रमासपत्रिका

सम्पुटिः-०९ सञ्चिका-०१

# एप्रिल् २०२२

श्री प्लवनामसंवत्सरस्य फाल्गुणकृष्णामावास्यातः
श्री शुभकृत्संवत्सरस्य चैत्रकृष्णामावास्यापर्यन्तम् - १९४३

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*



# सप्तगिरिः


| | |
|---|---|
| युगादिः | 06 |
| - कुमारी यु.कृष्णवेणी | |
| भागवते श्रीरामः | 08 |
| - श्री वि.प्रदीपकुमारः | |
| श्री शुभकृत् नाम सम्वत्सरफलितम् | 10 |
| श्री शुभकृत् नाम सम्वत्सर-राशिफलानि | 15 |
| - श्री तङ्गिराल वेङ्कटकृष्णबालहनुमान् | |
| श्रीरामाङ्घ्रिदासः श्रीकुलशेखरसूरिः | 16 |
| - डा.डी.दयानाथः | |
| साध्वीमतल्लिका सीता | 18 |
| - डा.सीहेच्.नागराजः | |
| श्रीरामपदसेवकः | 20 |
| - श्री जोषि भरद्वाजः | |
| रसप्रश्नादयः | 22 |


गौरवसम्पादकः:-
डा.के.एस्.जवहर् रेड्डि I.A.S.,
कार्यनिर्वहणाधिकारी, ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः:
डा॥ के.राधारमणः, M.A., M.Phil., Ph.D.,

सम्पादकः - डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री पि.रामराजु, M.A.,
प्रत्येकाधिकारी,
ति.ति.दे.मुद्रणालयः,
तिरुपतिः।

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः, छायाचित्रग्राहकः,
ति.ति.दे.
श्री बि.वेङ्कटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.

मुखचित्रम् - सीतासमेतश्रीकोदण्डरामस्वामिनः, ओण्टिमिट्ट
अन्तिमरक्षापुटः - श्रीवसन्तलक्ष्मीः



**सङ्केतः**
प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९,
२२६४३६०
सूचनानाम्, आक्षेपाणां च कृते
सम्पर्कं कुर्वन्तु -
sapthagiri.helpdesk@tirumala.org

एका पत्रिका : रू.५/-
वार्षिकग्राहकत्वम् रू.६०/-



# युगादिः

- कुमारी यु.कृष्णवेणी
चरवाणी - ७३९६०३२१७५

चान्द्रमानपद्धत्यनुसारं चैत्रशुक्लप्रतिपत् एव युगादिः इति उच्यते। तद्दिने एव नववर्षस्य आरम्भः। तदा एव वसन्तर्तोः आगमनमपि। प्रकृतिः अपि नवोत्साहवती भवति तदा। वृक्षाः सर्वे पल्लविताः भवन्ति। सर्वत्र वसन्तस्य प्रभावः दृश्यते। इदीनीन्तनजगति नवसंवत्सरः इति यद् आचरन्ति (जनवरी१) तदा तु प्रकृतौ नववर्षस्य किमपि लक्षणं न भवति। वृक्षाः सर्वे पर्णरहिताः तिष्ठन्ति। वातावरणम् अपि अतिशीतिलं भवति। जनाः अपि तादृशवातावरणे उत्साहवन्तः न भवति। एतत् युगादिपर्व समग्रे भारते आचर्यमाणं महापर्व। केषुचित् राज्येषु एतत् दिनं नूतनवर्षत्वेन आचर्यते। एतत् पर्व यस्मिन् वासरे भवति तस्य वासरस्य ग्रहः एव तस्य वर्षस्य अधिपतिः भवति। उदाहरणार्थं युगादिपर्व गुरुवासरे अस्ति चेत् गुरुग्रहः एव तस्य संवत्सरस्य अधिपतिः। युगादिः नाम युगस्य आदिः। युगानि चत्वारि कृत-त्रेता-द्वापर-कलियुगम् इति। भगवान् ब्रह्मा एतद्दिने एव जगतः सृष्टिकार्यम् आरब्धवान् इति कारणात् एतत् दिनं युगादिशब्देन निर्दिश्यते।

**प्राप्ते नूतनवत्सरे प्रतिगृहं कुर्यात् ध्वजारोहणम्।**
**स्नानं मङ्गलमाचरेत् द्विजवरैः साकं सुपूज्योत्सवैः।।**
**देवानां गुरुयोषितां च शिशवोऽलङ्कार वस्त्रादिभिः।**
**सम्पूज्यो गणकः फलं च श्रुणुयात्तस्माच्च लाभप्रदम्।।**

युगादिदिने विशेषतया निर्मीयमाणः ''पोलिका'' नामकखाद्यविशेषः।

युगादिदिने आम्र-निम्बपर्णैः गृहम् अलङ्कृत्य गृहस्य मन्दिराणाम् उपरि वा ओङ्कारचिह्नयुक्तं भगवद्ध्वजम् आरोपयन्ति। सूयोदयात् घण्टाद्वयात् प्रगोव उषः काले तैलाभ्यञ्जनं कृत्वा नववस्त्राणि धृत्वा पूजादानादीनि धार्मिक-कार्याणि आचरन्ति।

गुरून् ज्येष्ठान् च नमस्कृत्य आशीर्वादं प्राप्नुवन्ति। मध्याह्नभोजने प्रथमं निम्बगुडमिश्रणं खादित्वा अनन्तरं मधुरभोजनं कुर्वन्ति। मध्याह्नभोजनार्थं विशेषतया ''पोलिका'' नामकं खाद्यविशेषं निर्मान्ति। सायङ्काले ''पञ्चाङ्गश्रवणं'' करणीयम्। ग्रहणानां वृष्टि - सस्यसमृद्धीनां च पूर्वसूचनाः भवन्ति पञ्चाङ्गे। रात्रौ चन्द्रोदयावसरे चन्द्रस्य नमस्कारः क्रियते तद्दिने। बान्धवान् मित्राणि च शुभकामनाः वदन्ति परस्परमेलनद्वारा। दूरे स्थितेभ्यः शुभकामनाः प्रेषयन्ति च। तद्दिने रामायणश्रवणम् अपि कुर्वन्ति कुत्रचित्।

## तस्य दिनस्य महत्त्वम्

१. पुराणानुसारम् अस्मिन्नेव दिने ब्रह्मा सृष्टिकार्यम् आरब्धवान्।

२. श्रीरामः रावणं संहत्य अयोध्यां प्रत्यागत्य एतद्दिने एव शासनम् आरब्धवान्।

३. शालिवाहनशकस्य विक्रमसंवत्सरस्य आरम्भदिनं एतदेव।

**पञ्चाङ्गम्** - तिथिवारकरणयोगनक्षत्राणि पञ्चाङ्गानि भवन्ति। अस्मिन् भारतदेशे हैन्दवाः विशेषतया शुभाशुभकार्येषु पञ्चाङ्गानाम् उपयोगं कुर्वन्ति।

**तिथेश्च श्रियमाप्नोति वारादायुष्यवर्धनम्।**
**नक्षत्रात् हरते पापं योगात् रोगनिवारणम्।।**
**करणात् कार्यसिद्धिः स्यात् पञ्चाङ्गफलमुत्तमम्।**
**एतेषां श्रवणान्नित्यं गङ्गास्नानफलं भवेत्।।**

प्रतिनित्यम् एतषां श्रवणेन गङ्गास्नानफलं लभ्यते इति पूर्विकाणां विद्वत्तल्लजानाम् आशयः। प्रत्येकस्य अङ्गस्य श्रवणेन कानि कानि फलानि लभ्यन्ते इत्यपि अस्मिन् श्लोके वर्णितं दृश्यते। तिथेः श्रवणेन श्रियमाप्नोति। वारतः आयुष्यवर्धनं भवति। नक्षत्रात् पापं हरति। योगात् रोगनिवारणं भवति। करणात् कार्यसिद्धिः भवति। एवं पञ्चाङ्गानां श्रवणेन उत्तमोत्तमफलानि लभ्यन्ते।



**निम्ब-गुडमिश्रणस्य महत्त्वम् -**

आयुर्वेदानुसारं वसन्तर्तौ जायमानानां शारीरक - विकाराणां निमित्तम् उत्तमम् औषधम् अस्ति निम्बकम्। निम्बगुडयोः मिश्रणस्य खादनेन शरीरस्य समतोलनं साधितं भवति।

**शतायुर्वज्रदेहाय**
**सर्वसम्पत्कराय च।**
**सर्वारिष्टविनाशाय**
**निम्बकं दलभक्षणम्।।**

'निम्बकदलभक्षणेन शतायुः भवति। शरीरं वज्रमिव सुदृढं भवति। सर्वसम्पत्प्राप्तिः भवति। सर्वारिष्टविनाशः अपि भवति' इति वदति अयं श्लोकः। जीवनं नाम निम्बगुडमिश्रणमिव। मधुरत्वं तिक्तत्वं द्वयमपि भवति इत्यपि सन्देशं स्मारयति निम्बगुडमिक्षणम्। एतत् निम्बगुडमिश्रणं सुखःदुःखयोः, दिवा-रात्र्योः, लाभ-नष्टयोः, प्रीति-द्वेषयोः, जयापजययोः वा सङ्केतम् इव अस्ति। सर्वम् अपि जीवने समभावेन स्वीकरणीयमित्यस्य स्थितप्रज्ञत्वस्य अपि पाठः अस्ति अत्र। समग्रस्य वर्षस्य पूर्वसूचना दीयते एतत् निम्बगुडमिश्रणम्।

हैन्दवानाम् अत्यन्तं श्रेष्ठतमं पर्व युगादिः। प्रधानतया आन्ध्रप्रदेश-कर्णाटक-महाराष्ट्रप्रान्तेषु विशेषरूपेण समाचरन्ति जनाः।

विविधप्रान्तेषु विविधनामभिः अस्य पर्वणः व्यवहारः दृश्यते।

| | |
|---|---|
| आन्ध्रा-कर्णाटक | - उगादिः/युगादिः। |
| महाराष्ट्र | - गुडिपडवा। |
| तमिलनाडु | - पुत्ताण्डु। |
| केरलम् | - विषु। |
| पञ्जाब् | - वैशाखी। |
| अस्साम् | - बिहु। इति।। |





## आकाशगङ्गा, हनुमज्जन्मस्थलं अञ्जनाद्रिः

तिरुमलस्थपुण्यतीर्थेषु अकाशगङ्गा सुप्रसिद्धा। श्रीनिवासनिलयस्य उत्तरदिग्भागे ४ कि.मी. दूरे वर्तते। भक्ताः सोपानमार्गेण आकाशगङ्गातीर्थं प्राप्नुवन्ति। अत्रैव अञ्जनादेवी तपः तप्त्वा, आञ्जनेयं पुत्रत्वेन आप इति पुराणेषु वर्तते। श्रीशस्य अभिषेचनसेवां कृतवान् वैष्णवभक्ताग्रगण्यः तिरुमलनम्बिः प्रतिनित्यं अतिकष्टेन पापविनाशितीर्थात् जलं नयति स्म। स्वप्रियभक्तस्य कष्टम् असहमानः श्रीवेङ्कटेश्वर एवासृजत् इमां आकाशगङ्गाम्। अस्याः समीपे श्रीबालाञ्जनेयस्य, श्री अञ्जनादेव्याश्च आलयौ स्तः। तत्र गन्तुं वाहनसौकर्यमपि अस्ति।



केनोपायेन लघुना विष्णोर्नामसहस्रकम्।



# भागवते श्रीरामः

- श्री वि.प्रदीपकुमारः
चरवाणी - ९४९१६४६५३२



भागवतं नाम श्रीकृष्णस्य रसरञ्जकवर्णनमयमिति, उद्धवाद्युपदेशमन्दिरमिति, निजजीवनसागरतारकमिति, शुकमुनिमुखनिःसृतपीयूषमिति, श्रवणामृतदायकज्योतिरिति, ऋक्-निगद-साम-अथर्वादिसारमिति, पुरञ्जनादिनानोपाख्याननिधिरिति, परीक्षित्पापापनोदकमिति, महन्महत्तरमहत्तमऋषिमुनीनां कथास्यन्दकमिति, श्रीहरेः मत्स्य-कूर्म-वराह-नृसिंहाद्यवतारनिरूपणपरम् इत्याद्यनेकोन्नतविषयकोदधिरिति समे प्रायः जानन्त्येव।

तत्र भगवदवतारवर्णनवेलायां श्रीरामस्य महच्चित्रणं वितरति भागवतम्। निखिलगुणगणमणिनिधिं श्रीरामचन्द्रं रघुकुलरत्नं लोकोद्धारकत्वेन, चारित्र्यकशिक्षकत्वेन, भक्तोद्धारकत्वेन, दुष्टनिग्राहकत्वेन, प्रजाप्रियनायकत्वेन वर्णयति श्रीमद्भागवतम्,

**गुर्वर्थे त्यक्तराज्यो व्यचरदनुवनं पद्मपाद्भ्यां प्रियायाः**
**पाणिस्पर्शाक्षमाभ्यां मृजितपथिरुजो यो हरीन्द्रानुजाभ्याम्।**
**वैरूप्याच्छूर्पणख्याः प्रियविरहरुषाऽऽरोपितभ्रूविजृम्भः**
**त्रस्ताऽब्धिर्बद्धसेतुः खलदवदहनः कोसलेन्द्रोऽवतान्नः।।**
(भा.९-८-८६)

इति।।

## त्यागशीलता

पितृवाक्यपालनाय साम्राज्यलक्ष्मीं पादद्वयाश्रितसम्पदं तिरस्कृत्य मित्राणि, गेहं, ग्रामदिकं तत्याज।

मन्थरोपदिष्टायाः कैकेय्याः वचः त्यक्त्वा "राज्यं ममैव" इति वदति चेत् यः कोपि रामं नाक्षिपति। समस्त-प्रजानीकस्य आमोदः रामस्येव दशरथस्यापि नासीत्। कैकेयी, भरतेत्यादिष्वपि किमु वक्तव्यम्? राम एव राजा भवेदिति स्त्रियः, पुरुषाः, अमात्याः, ज्ञानिनः वसिष्ठादयः सर्वेऽपि ऐच्छन्।

अस्मिन् सन्दर्भे रामं विना के तादृशसुवर्णावकशं त्यक्तुमिच्छन्ति? वयं चेत्, "सर्वोन्नतन्यायालयं" गत्वा वा राज्यं प्राप्तुमेव प्रयतामहै किल! किन्तु श्रीरामचन्द्रः राज्यं तृणतुल्यं मत्वा पितृवाक्यं परिपाल्य समग्रेतिहासे 'त्यागशीलः' अभवत्। सीतालक्ष्मणयुक्तः सन् काननं गतवानपि।

## दुष्टशिक्षणं शिष्टरक्षणम् -

तत्र अटव्यां दुर्बुद्धियुतां कठोरहृदयां शूर्पणखां राक्षसकन्यां विकृताकारां कृत्वा अशिक्षयत्। पूर्वं सच्चारित्र्यसम्पन्नां पाषाणायिताम् अहल्याम् अरक्षयत्। तेन दुष्टशिक्षणशिष्टरक्षणरूपम् अवतारकार्यं चकारेति ज्ञायते।

## क्षमा -

रावणेन सीताया अपहरणानन्तरं लङ्कागमने प्रतिबन्धकः सागरः अपसरेदिति प्रतीक्षां कृत्वा तदनपसरणेन किञ्चित् कुपितः इव श्रीरामः लक्ष्मणं प्रति, "चापमानय सौमित्रे! समुद्रं शोषयिष्यामि; पद्भ्यां यातु प्लवङ्गमाः" इत्युक्त्वा शरस्वीकारेणैव सिन्धुराजः वरुणः रामपादमाश्रितवान्। "आदौ क्षमा, तदनवगमे शिक्षा" इति रामस्य गमनम्।

पश्चात् लङ्कागमनाय हनुमदादिभिः सेतुं निर्ममे। ततः सेतुं तीर्त्वा रावणं संहृत्य अत्युत्तमलोकोपकारम् अकरोत् करुणामूर्तिः श्रीरामचन्द्रः।

**रक्षोवधो जलधिबन्धनमस्त्रपूगैः**
**किं तस्य शत्रुहनने कपयः सहायाः।**
**यस्यामलं नृपसदस्सु यशोऽधुनापि**
**गायन्त्यघघ्नमृषयो दिगिभेन्द्रपाते।।**
**तं नाकपालवसुपालकिरीटजुष्ट -**
**पादाम्बुजं रघुपतिं शरणं प्रपद्ये।।**
(भगवते ९-९-२०-२१)



असङ्ख्यममेयं निशाचरसमूहं हस्तेनैकेन संहरतः रामस्य कपयः सहायकाः भवितुमर्हन्ति वा? तथापि रावणसमूहस्याभिमुखेन अधावन्। किन्तु राम एक एव युद्धं चकार। तस्य युद्धचमत्कारः अद्भुतः खलु!

अतएव नारायणपण्डिताचार्याः,

**रामः पुरस्तात् परतोऽपि रामो**
**रामः परं दिक्षु विदिक्षु रामः।**
**रामैरनन्तैरिति विश्वरूपो**
**निघ्नन्नरातीन्विरराज रामः।। (मणिमञ्जरी)** इति स्तुवन्ति श्रीरामम्।

पूर्वं ऋषिमुनिहिंसकानां चतुर्दशसहस्रसङ्ख्याकानां राक्षसानां तथा रावण-कुम्भकर्ण-इन्द्रजिदादि-हननानन्तरं रावणसम्बद्धं चतुर्मुखब्रह्मणा अवध्यत्ववरं प्राप्तं कोटिकोटिसैन्यं युद्धायागतम् आलोक्य कपिभिः सेतुतरणानन्तरं श्रीरामः अनन्तरुपी सन् तान् जघान।

तदेव गायन्ति दासवर्याः अपि,

''अल्लि नोडलु राम, इल्लि नोडलु राम'' इत्यादि।

अत एव खलु वदन्ति कवयः यत्,, **यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम्। अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति।।** इति। अत्र प्रथमपादद्वयस्य रामः, अन्तिमद्वयस्य रावणः दृष्टान्तः भवति।

एवञ्च 'रामादिवत् वर्तितव्यं, न रावणादिवत् इति वृद्धवचनमनुसरन्तः श्रीरामस्य जन्मदिनं पुरस्कृत्य चैत्रशुद्धनवम्यां सम्भ्रमेण विहितपूजाभिः साकं श्रीरामतारकमन्त्रजपं, पुण्यकोटिफलप्रदं रामायणपारायणादिकं कथाश्रवणं च कुर्मः। सत्कार्यसम्पादने सदा सन्नद्धा भवेम रामानुग्रहेण।



**अमेरिकादेशे केलिफोर्णियाराज्ये डब्लिन् नामके नगरे गतवर्षे पञ्चमुखहनूमतः एकादशपदौन्नत्यभृत् कश्चिदतिसुन्दरो विग्रहः प्रतिष्ठापितः तन्मन्दिरस्य निर्मात्रा श्रीमता चन्द्रशेखरशर्मणा। तं स्वामिनमुद्दिश्य सरलमष्टकमिदं रचितं प्रख्या राधाकृष्णशर्मणा।**

# नमांसि



प्रथमं प्राङ्मुखं यस्य चित्तशुद्धिप्रदायकम्।
प्रधानं वानरास्यं तं हनूमन्तं नमाम्यहम्।।१।।

दक्षिणाभिमुखं यस्य द्वितीयं विजयप्रदम्।
उग्रं नृसिंहवक्त्रं तं हनूमन्तं नमाम्यहम्।।२।।

पश्चिमाभिमुखं यस्य तृतीयं द्वेषभञ्जकम्।
वीरगरुत्मतास्यं तं हनूमन्तं नमाम्यहम्।।३।।

यस्योदीच्यां चतुर्थं स्याद् ग्रहदोषनिवारकम्।
लक्ष्मीवराहवक्त्रं तं हनूमन्तं नमाम्यहम्।।४।।

ऊर्ध्वमुखं भवेद्यस्य पञ्चमं ज्ञानदायकम्।
श्रीहयग्रीववक्त्रं तं हनूमन्तं नमाम्यहम्।।५।।

मुखपञ्चकधर्तारम् अहिरावणमारकम्।
रामलक्ष्मणरक्षं तं हनूमन्तं नमाम्यहम्।।६।।

वातात्मजं कपिश्रेष्ठं वाग्विदं भक्तवत्सलम्।
नानावरप्रदातारं रामकीर्तनतत्परम्।।७।।

तं डब्लिन्नगरस्थं च चन्द्रशेखरभावितम्।
पञ्चमुखं हनूमन्तं भूयो भूयो नमाम्यहम्।।८।।

सुगन्धिकुन्तलाम्बायाः प्रपौत्रेण प्रकल्पितम्।
पञ्चमुखाञ्जनेयस्याष्टकमेतद्धि भक्तितः।।९।।

देशविदेशेष्वपि
एतादृशमन्दिरनिर्माणादिकार्येषु
सहभागिनः भूत्वा धर्मं प्रचारयद्भ्यः
तथा संस्कृतभाषाप्रचारकेभ्यः सर्वेभ्योऽपि
शुभकामनाः 'सप्तगिरि' पक्षतः।



# श्री शुभकृत् नाम सम्वत्सरफलितम्

- टि.वि. बालहनुमान्
चरवाणी - ९५७३९३५४२६

लोके नवविधकालमानेषु चान्द्रमानम् अन्यतमं तथा अस्माकं प्रान्तव्यवहारोऽयं भवति। एतच्चान्द्रमानरीत्या संवत्सरस्य अस्य ''शुभकृत्'' इति नाम भवति। ''शुभं करोतीति शुभकृत्'' नामवशादेव लोके व्यवहारः दृश्यते, तस्मात् शुभकृत् इति नाम्ना एव ज्ञायते यत् संवत्सरोऽयं सर्वेषां प्राणिनाम् कृते अतीव शुभदायकः मङ्गलकरश्च भवतीति। प्रभवादीनां षष्ठिसंवत्सराणां पञ्चवर्षात्मके युगकल्पने अष्टमयुगेऽस्मिन् प्रथमत्वात् वर्षोऽयं सम्वत्सर आख्याकः यस्य अधिपतिर्भवति अग्निः। अस्मिन् तिलदानम् अतीव पुण्यप्रदम् वर्तते। शुभकृत् संवत्सराधिपो भवति गुरुः, तस्मात् गुरोः एवञ्च दत्तात्रेय-बालात्रिपुरसुन्दर्योः ध्यानेन वर्षोऽयम् आरोग्य-ज्ञान-धान्यवृद्धिञ्च करोति।

गते वर्षद्वये बृहस्पतेः मकर- कुम्भराश्योः पापग्रहैस्सह सञ्चार-समागमात् लोके आरोग्यपीडा, आर्थिकसंक्षोभः दुर्भिक्षञ्च अनुभूतम्। गुरोः कुम्भराशिसञ्चारकाले वैज्ञानिक-साङ्केतिकविभागेषु पुरोगतिः दृष्टाऽपि पूर्णांशत्वेन समस्यानिवृत्तिः न जाता। वर्षेऽस्मिन् चैत्रमासे गुरोः स्वक्षेत्रे मीनराशौ प्रवेशात् देशे शारीरक-मानसिकसमतुल्यता आर्थिकस्थिरत्वञ्च क्रमेण वर्धते एवञ्च यज्ञयागादिक्रतूनाम् आयोजनं, साधुजनानां संरक्षणं, सामाजिकसंक्षेमकार्यक्रमेषु शोभनानि विशिष्टानि परिवर्तनानि दृश्यन्ते। संवत्सरस्य अस्य आरम्भे कालसर्पदोषः विद्यते। आषाढ-कार्तिक-मार्गशिरमासेषु देशे सुभिक्ष-रोगरहित-आह्लादकरी स्थितिः दृश्यते। ज्येष्ठमासे रवेः आर्द्रानक्षत्रस्य प्रवेशकाले चन्द्रस्य पूर्णजलराशौ गुरुणा सह समागमात् सुवृष्टिः जायते, तेन सस्यानां अनुकूलता वृद्धिश्च भवति। वर्षेऽस्मिन् आश्वयुजस्य अमायाम् अर्थात् अक्टोबर् मासस्य २५ तमे दिनाङ्के पाक्षिकं सूर्यग्रहणं पुनश्च कार्तिकस्य पूर्णिमायाम् अर्थात् नवम्बर् मासस्य ८ मे दिनाङ्के पाक्षिकं चन्द्रग्रहणञ्च सम्भवति। चैत्रशुक्ल-द्वादश्याः मध्याह्ने गुरोः मीनराशौ प्रवेशात् एप्रिल् १३ दिनाङ्के प्रणीता नद्याः पुष्करारम्भः भवति। अधिकारिणां मनस्थितिरपि पूर्वाऽपेक्षया विकसिता भवति। शास्त्र-साङ्केतिक-वैद्यविभागीयाः प्रतिकूलस्थितीः अधिगमय्य नूतनाविष्करणरता भूत्वा देशस्य प्रगतये योगदानं प्रदास्यन्ति। देशसंविधानस्य सर्वकारस्य च निर्णयाः आशाजनकाः योग्यानुगुणाः भवन्ति। चैत्रवैशाखमासयोः द्रव्यादेः यथायोग्यं मूल्यं, ज्येष्ठ-आषढमासयोः स्वल्पवृष्टिः एवञ्च सुवर्णरजतादीनां लोहानां मूल्यह्रासः, श्रावणभाद्रपदमासयोः वृष्टेः आधिक्यं, घृत-तैल-आहारधान्यादीनां सममूल्यत्वं, मार्गशीर्षादित्रये सूपादीनां मूल्यवृद्धिः, फाल्गुणमासे रोगभीतिः अधिकारिषु कलहाश्च भवन्ति। कार्तिकमासे कुजः वृषभराशौ वक्रगतिको भूत्वा स्तब्धो भवतीति हेतोः ऐर्लान्ड्, इरान् इत्यादि वायव्यविदेशेषु विस्फोटनानां अग्निप्रमादानाञ्च सम्भावना वर्तते। मिथुनलग्नस्य षष्ठ-लाभाधिपत्वेन अशुभः कुजः अष्टमे स्थितत्वात् दोषप्रदः। ततः अस्मद्देशात् पश्चिमोत्तरमध्यदेशेषु अफ्गानिस्तान् इत्यादिषु प्राणघातः भवितुं शक्यते। वार्षारम्भे कालसर्पदोषात् श्रावणमासारम्भे कुजराह्वोः समागमाच्च अरिष्टोत्पत्तिः, तदा देशस्य क्लेशयुक्तत्वात् कालेऽस्मिन् जनाः सावधानाः भवेयुः। मार्गशिर-माघमासयोः राजकीयकलहाः, वादप्रतिवादाः, रक्षकभटानां तीव्रचर्याः अनिवार्याः दृश्यन्ते। आरण्यकसम्पत्तेः रक्षणस्य आवश्यकता दरीदृश्यते। आहारधान्यादीनाम् उत्पत्तिः क्रमेण वृद्धिं प्राप्य देशस्य उन्नताऽर्थिकव्यवस्थायै उपयोक्ष्यते।

एवं शुभकृन्नामा वर्षोऽयम् अस्माकं सर्वेषां यथाभिधं मङ्गलप्रदः भवेदिति कलियुगप्रत्यक्षदैवं श्रीवेङ्कटेश्वरं प्रार्थयामः।



# ।।श्रीरामनवमी पूजाविधानम्।।



प्रातःकाले उत्थाय,स्नानादिनित्यकृत्यानि समाप्य शुद्धः सन् तुलसी-पुष्पफलादि द्रव्याणि सम्पाद्य श्रीरामस्य चित्रपटं विग्रहं वा पूजयेत् यथाविधि। आचम्य प्राणानायम्य सङ्कल्पयेत्।

ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं शुभे शोभने मुहूर्ते श्रीमहाविष्णोराज्ञया प्रवर्तमानस्य अद्य ब्रह्मणः द्वितीयपरार्धे श्वेतवराहकल्पे वैवस्वतमन्वन्तरे कलियुगे प्रथमपादे जम्बूद्वीपे भरतवर्षे भरतखण्डे मेरोः...दिग्भागे, श्रीशैलस्य...प्रदेशे गङ्गागोदावर्योः मध्यदेशे, अस्मिन् वर्तमान व्यावहारिकचान्द्रमानेन स्वस्ति श्री..नाम संवत्सरे उत्तरायणे वसन्तर्तौ चैत्रमासे कृष्णपक्षे नवम्यां...वासरे शुभनक्षत्र-शुभयोग-शुभकरण एवंगुणविशेषण-विशिष्टायां शुभतिथौ श्रीमान् गोत्रः धर्मपत्नीसमेतः..नामधेयः श्रीमतः.. गोत्रस्य..... नामधेयस्य सकुटुम्बस्य क्षेम-स्थैर्य-धैर्य-आयुरोराग्य- ऐश्वर्याभिवृद्ध्यर्थं जाम्बवत्-सुग्रीव-हनुमत्-लक्ष्मण-भरत-शत्रुघ्नपरिवारसमेतश्रीसीतारामचन्द्रदेवताप्रीत्यर्थं श्रीसीतारामचन्द्रदेवताप्रसादसिद्ध्यर्थं षोडशोपचारपूजां करिष्ये इति सङ्कल्प्य, कलशोपरि हस्तं निधाय-

कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः। मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः।।
कुक्षौ तु सागरास्सर्वे सप्तद्वीपा वसुन्धरा। ऋग्वेदोऽथ यजुर्वेदः सामवेदोह्यथर्वणः।।
अङ्गैश्च सहिताः सर्वे कलशं तु समाश्रिताः। गङ्गे च यमुने कृष्णे गोदावरि सरस्वति।
नर्मदे सिन्धु कावेरि जलेस्मिन् सन्निधिं कुरु।। (कलशजलं पुष्पेण तुलस्या वा प्रातिमां प्रोक्ष्य, स्वयं प्रोक्ष्य, पूजाद्रव्याणि च सम्प्रोक्ष्य) आदौ निर्विघ्नेन परिसमाप्त्यर्थं श्रीमहागणपतिपूजां करिष्ये।
(गणपतिपूजानन्तरं) पूर्वसङ्कल्पितश्रीसीतारामचन्द्रपूजां करिष्ये (इति आरभेत्)

ध्यानं - वामे भूमिसुता पुरस्तु हनुमान् पश्चात्सुमित्रासुतः। शत्रुघ्नो भरतश्च पार्श्वदलयोः वाय्वादिकोणेषु च।।
सुग्रीवश्च विभीषणश्च युवराट् तारासुतो जाम्बवान्। मध्ये नीलसरोजकोमलरुचिं रामं भजे श्यामलम्।।
कन्दर्पकोटिलावण्यं मन्दस्मितशुभेक्षणम्। महाभुजं श्यामवर्णं सीतारामं भजाम्यहम्।।

श्रीसीतारामचन्द्रपरमात्मने नमः ध्यानं समर्पयामि।

आवाहनम् - श्रीरामागच्छ भगवन् रघुवीर नृपोत्तम। जानक्या सह राजेन्द्र सुस्थिरो भव सर्वदा।।
रामचन्द्र महेष्वास रावणान्तक राघव। यावत्पूजां सामाप्येहं तावत्त्वं सन्निधिं कुरु।।
रघुनायक राजर्षे नमो राजीवलोचन। रघुनन्दन मे देव श्रीरामाभिमुखो भव।।

श्रीसीतारामचन्द्रपरमात्मने नमः आवहयामि।

सिंहासनम् - राजाधिराज राजेन्द्र रामचन्द्र महाप्रभो। रत्नसिंहासनं तुभ्यं दास्यामि स्वीकुरु प्रभो।।

श्रीसीतारामचन्द्रपरमात्मने नमः नवरत्नखचितसिंहासनं समर्पयामि।

पाद्यम् - त्रैलोक्यपावनानन्त नमस्ते रघुनायक। पाद्यं गृहाण राजर्षे नमो राजीवलोचन।।

श्री सीतारामचन्द्रपरमात्मने नमः पादयोः पद्यं समर्पयामि

अघ्र्यम् - परिपूर्ण परानन्द नमो राजीवलोचन। गृहाणार्घ्यं मया दत्तं कृष्ण विष्णो जनार्दन।।

श्री सीतारामचन्द्रपरमात्मने नमः हस्तयोः अर्घ्यं समर्पयामि।

आचमनम् - नमो नित्याय शुद्धाय बुद्धाय परमात्मने। गृहाणाचमनं राम सर्वलोकैकनायक।।

श्री सीतारामचन्द्रपरमात्मने नमः मुखे आचमनं समर्पयामि

मधुपर्कम् - नमः श्रीवासुदेवाय बुद्धाय परमात्मने। मधुपर्कं गृहाणेदं राजराजाय ते नमः।।

श्रीसीतारामचन्द्रपरमात्मने नमः मधुपर्कं समपर्ययामि।।

पञ्चामृतस्नानम् - क्षीरं  दधि घृतं चैव शर्करामधुसंयुतम्। सिद्धं पञ्चामृतं स्नानं राम त्वं प्रतिगृह्यताम्।।

श्रीसीतारामचन्द्रपरमात्मने नमः पञ्चामृतस्नानं समर्पयामि।

शुद्धोदकस्नानम् - ब्रह्माण्डोदरमध्यस्थं तीर्थैश्च रघुनन्दन। स्नापयिष्याम्यहं भक्त्या सङ्गृहाण जनार्दन।।

श्रीसीतारामचन्द्रपरमात्मने नमः स्नानानन्तरम् आचमनीयम् समर्पयामि।।

वस्त्रम् - सन्तप्तकाञ्चनप्रख्यं पीताम्बरयुगं शुभम्। सङ्गृहाण जगन्नाथ रामचन्द्र नमोस्तु ते।।

श्रीसीतारामचन्द्रपरमात्मने नमः वस्त्रयुग्मं समर्पयामि।। अनन्तरम् आचमनीयं समर्पयामि।

यज्ञोपवीतम् - अज्ञानध्वंसनं नृणां प्रज्ञाकरमनुत्तमम्। धरं यज्ञोपवीतं मे वाञ्छितार्थफलप्रद।।

श्रीसीतारामचन्द्रपरमात्मने नमः यज्ञोपवीतं समर्पयामि।।

आभरणानि - कौस्तुभाहारकैंयूर रत्नकङ्कण नूपुरान्। एवमादीनलङ्कारान् गृहाण जगदीश्वर।।

श्रीसीतारामचन्द्रपरमात्मने नमः आभरणानि समर्पयामि।।

गन्धम् - कुङ्कुमागरुकस्तूरी - कर्पूरैर्मिश्रसम्भवम्। तुभ्यं दास्यामि देवेश - श्रीराम स्वीकुरु प्रभो।।

श्रीसीतारामचन्द्रपरमात्मने नमः गन्धं समर्पयामि।

पुष्पम् - तुलसीकुन्दमन्दरजातीपुन्नागचम्पकैः। नीलाम्बुजैः बिल्ल्वदलैः पुष्पमाल्यैश्च राघव।
पूजयिष्यम्यहं भक्त्या सङ्गृहाण जनार्दन।।

श्रीसीतारामचन्द्रपरमात्मने नमः नानाविधपरिमळपत्रपुष्पाणि समर्पयामि।

वनमाला -  तुलसीकुन्दमन्दार - पारिजाताम्बुजैर्युताम्। वनमालां प्रदास्यामि -  गृहाण जगदीश्वर।।

श्रीसीतारामचन्द्रपरमात्मने नमः वनमालां समर्पयामि।।

# अथ अङ्गपूजा

श्री रामाय नमः - पादौ पूजयामि।।
श्री रामभद्राय नमः - जङ्घे पूजयामि।
श्री रामचन्द्राय नमः - जानुनी पूजयामि।।
श्री शाश्वताय नमः - ऊरू पूजयामि।।
श्री रघुवल्लभाय नमः - कटिं पूजयामि।।
श्री दशरथात्मजाय नमः - उदरं पूजयामि।।
श्री कौसलेयाय नमः - नाभिं पूजयामि।।
श्री लक्ष्मणाग्रजाय नमः - वक्षःस्थलं पूजयामि।।
श्री कौस्तुभाभरणाय नमः - कण्ठं पूजयामि।।
श्री राजराजायनमः - स्कन्धौ पूजयामि।।
श्री कोदण्डरामाय नमः - बाहू पूजयामि।।
श्री भरताग्रजाय नमः - मुखं पूजयामि।।
श्री पद्मनाभाय नमः - नेत्रे पूजयामि।।
श्री रमाय नमः - कर्णौ पूजयामि।।
श्री सर्वेश्वराय नमः - शिरः पूजयामि।।
श्री रामचन्द्रपरब्रह्मणे नमः - सर्वाङ्गानि पूजयामि।।

ततः अष्टोत्तरं कुर्यात्।।

# श्रीरामाष्टोत्तरशतनामावली

ॐ श्रीरामाय नमः।
ॐ रामभद्राय नमः।
ॐ रामचन्द्राय नमः।
ॐ शाश्वताय नमः।
ॐ राजीवलोचनाय नमः।
ॐ श्रीमते नमः।
ॐ राजेन्द्राय नमः।
ॐ रघुपुङ्गवाय नमः।
ॐ जानकीवल्लभाय नमः।
ॐ जैत्राय नमः ॥१०॥

ॐ जितामित्राय नमः।
ॐ जनार्दनाय नमः।
ॐ विश्वामित्रप्रियाय नमः।
ॐ दान्ताय नमः।
ॐ शरणत्राणतत्पराय नमः।
ॐ वालिप्रमथनाय नमः।
ॐ वाग्मिने नमः।
ॐ सत्यवाचे नमः।
ॐ सत्यविक्रमाय नमः।
ॐ सत्यव्रताय नमः ॥२०॥

ॐ व्रतधराय नमः।
ॐ सदाहनुमदाश्रिताय नमः।
ॐ कौसलेयाय नमः।
ॐ खरध्वंसिने नमः।
ॐ विराधवधपंडिताय नमः।
ॐ विभीषणपरित्रात्रे नमः।
ॐ हरकोदण्डखण्डनाय नमः।
ॐ सप्ततालप्रभेत्रे नमः।
ॐ दशग्रीवशिरोहराय नमः।
ॐ जामदग्न्यमहादर्पदलनाय नमः॥३०॥

ॐ ताटकान्तकाय नमः।
ॐ वेदान्तसाराय नमः।
ॐ वेदात्मने नमः।
ॐ भवरोगस्य भेषजाय नमः।
ॐ दूषणत्रिशिरोहन्त्रे नमः।
ॐ त्रिमूर्तये नमः।
ॐ त्रिगुणात्मकाय नमः।
ॐ त्रिविक्रमाय नमः।
ॐ त्रिलोकत्मने नमः।
ॐ पुण्यचारित्रकीर्तनाय नमः॥ ४०॥

ॐ त्रिलोकरक्षकाय नमः।
ॐ धन्विने नमः।
ॐ दंडकारण्यवर्तनाय नमः।
ॐ अहल्याशापविमोचनाय नमः।
ॐ पितृभक्ताय नमः।
ॐ वरप्रदाय नमः।
ॐ जितेन्द्रियाय नमः।
ॐ जितक्रोधाय नमः।
ॐ जितमित्राय नमः।
ॐ जगद्गुरवे नमः॥ ५०॥

ॐ ऋक्षवानरसङ्घातिने नमः।
ॐ चित्रकूटसमाश्रयाय नमः।
ॐ जयन्तत्राणवरदाय नमः।
ॐ सुमित्रापुत्रसेविताय नमः।
ॐ सर्वदेवादिदेवाय नमः।
ॐ मृतवानरजीवनाय नमः।
ॐ मायामारीचहन्त्रे नमः।
ॐ महादेवाय नमः।
ॐ महाभुजाय नमः।
ॐ सर्वदेवस्तुताय नमः॥६०॥

ॐ सौम्याय नमः।
ॐ ब्रह्मण्याय नमः।
ॐ मुनिसंस्तुताय नमः।
ॐ महायोगिने नमः।
ॐ महोदराय नमः।
ॐ सुग्रीवेप्सितराज्यदाय नमः।
ॐ सर्वपुण्याधिकफलाय नमः।
ॐ स्मृतसर्वाधनाशनायै नमः।
ॐ आदिपुरुषाय नमः।
ॐ परमपुरुषाय नमः॥ ७०॥

ॐ महापुरुषाय नमः।
ॐ पुण्योदयाय नमः।
ॐ दयासाराय नमः।
ॐ पुराणपुरुषोत्तमाय नमः।
ॐ स्मितभाषिणे नमः।
ॐ मितभाषिणे नमः।
ॐ पूर्वभाषिणे नमः।
ॐ राघवाय नमः।
ॐ अनन्तगुणगम्भीराय नमः।
ॐ धीरोदात्तगुणोत्तमाय नमः॥८०॥

ॐ मायामानुषचारित्राय नमः।
ॐ महादेवादिपूजिताय नमः।
ॐ सेतुकृते नमः।
ॐ जितवाराशये नमः।
ॐ सर्वतीर्थमयाय नमः।
ॐ हरये नमः।
ॐ श्यामाङ्गाय नमः।
ॐ सुन्दराय नमः।
ॐ शूराय नमः।
ॐ पीतवाससे नमः॥९०॥

ॐ धनुर्धराय नमः।
ॐ सर्वयज्ञाधिपाय नमः।
ॐ यज्विने नमः।
ॐ जरामरणवर्जिताय नमः।
ॐ शिवलिङ्गप्रतिष्ठात्रे नमः।
ॐ सर्वापगुणवर्जिताय नमः।
ॐ परमात्मने नमः।
ॐ परब्रह्मणे नमः।
ॐ सच्चिदानन्दविग्रहाय नमः।
ॐ परञ्ज्योतिषे नमः ॥१००॥

ॐ परन्धाम्ने नमः।
ॐ पराकाशाय नमः।
ॐ परात्पराय नमः।
ॐ परेशाय नमः।
ॐ पारगाय नमः।
ॐ पाराय नमः।
ॐ सर्वदेवात्मकाय नमः।
ॐ परस्मै नमः॥ १०८॥

धूपम् - वनस्पत्युद्भवैर्दिव्यैः नानागन्धैस्सुसंयुतः। आघ्रेयस्सर्वदेवानां धूपोऽयं प्रतिगृह्यताम्।।

श्रीसीतारामचन्द्रपरमात्मने नमः धपमाघ्रांपयामि ।।

दीपम् - ज्योतिषां पतये तुभ्यं नमो रामाय वेधसे। गृहाण दीपकं राजन् त्रैलोक्यतिमिरापहम्।।

श्रीसातारामचन्द्रपरमात्मने नमः दीपं दर्शयामि।।

नैवेद्यम् - इदं दिव्यान्नममृतं रसैष्षड्भिः समन्वितम्। श्रीरामचन्द्र राजेन्द्र! नैवेद्यं प्रतिगृह्यताम्।।

विधिप्रकारेण नैवेद्यं कुर्यात्। मध्ये मध्ये पानीयं समर्पयामि। अमृतापिधानमसि उत्तरापोशनं समर्पयामि। हस्तप्रक्षालनं मुखप्रक्षालनं समर्पयामि। पादौ प्रक्षलायामि। शुद्धाचमनीयं समर्पयामि।

ताम्बूलम् - नागवल्लीदलैर्युक्तं पूगीफलसमन्वितम्। ताम्बूलं गृह्यतां राम कर्पूरादिसमन्वितम्।।

श्रीसीतारामचन्द्रपरमात्मने नमः ताम्बूलं समर्पयामि।।

नीराजनम् - मङ्गलं विश्वकल्याण नीराजनमिदं हरे। सङ्गृहाण जगन्नाथ रामभद्र नमोस्तु ते।।

श्री सीतारामचन्द्रस्वामिने नमः नीराजनं दर्शयामि। नीराजान्तरम् आचमनीयं समर्पयामि।

मन्त्रपुष्पम् - नमो देवाधिदेवाय रघुनाथाय शार्ङ्गिणे। चिन्मयानन्दरूपाय सीतायाः पतये नमः।।

श्री सीतारामचन्द्रपरमात्मने नमः सुवर्णदिव्यमन्त्रपुष्पं समर्पयामि।

प्रदक्षिणनमस्काराः -

यानिकानि च पापानि जन्मान्तरकृतानि च। तानि तानि प्रणश्यन्ति प्रदक्षिण पदे पदे।।

पापोहं पापकर्माहं पापात्मा पापसम्भवः। त्राहि मां कृपया देव शरणागतवत्सल।।

अन्यथा शरणं नास्ति त्वमेव शरणं मम। तस्मात्कारुण्यभावेन रक्ष रक्ष रघूत्तम।।

श्री सीतारामचन्द्रपरमात्मने नमः आत्मप्रदक्षिणनमस्कारान् समर्पयामि।

पुष्पाञ्जलिः - दाशरथाय विद्महे सीतावल्लभाय धीमहि, तन्नो रामचन्द्रः प्रचोदयात्।

श्री सीतारामचन्द्रपरमात्मने नमः पुष्पाञ्जलिं समर्पयामि।।

उत्तरपूजा - श्रीजाम्बवत्सुग्रीवहनुमल्लक्ष्मणभरतशत्रुघ्नपरिवारसहितश्रीसीतारामचन्द्र-परब्रह्मणे नमः

छत्रं धारयामि - चामरं वीजयामि

गीतं श्रावयामि - नृत्यं दर्शयामि

आन्दोलिकम् आरोहयामि - अश्वम् आरोहयामि

गजम् आरोहयामि ।

समस्त राजोपचार देवोपचार भक्त्युपचार शक्त्युपचारपूजां समर्पयामि।

यस्य स्मृत्या च नामोक्त्या तपः पूजाक्रियादिषु। न्यूनं संपूर्णतां याति सद्यो वन्दे तमच्युतम्।।

मन्त्रहीनं क्रियाहीनं भक्तिहीनं रघूत्तम। यत्पूजितं मया राम परिपूर्णं तदस्तु ते।।

अनया ध्यान-आवहनादिपूजया श्री सीतारामचन्द्रदेवता सुप्रीता सुप्रसन्ना वरदा भवतु।।

इति सजलमक्षतान् विसृजेत्।

## सर्वं श्री सीतारामचन्द्रार्पणमस्तु



# श्री 'शुभकृत्' नामसम्वत्सर-राशिफलानि

मेष राशिः



वर्षेऽस्मिन् गुरोः व्ययराशिसंचारात् शुभकार्यार्थं धनव्ययो भवति। नूतनोत्साहं सम्प्राप्य मुख्यकार्यरताः भवन्ति। विद्यार्थिनाम् अनुकूलोऽयं कालः। साधारणेष्वपि विषयेषु असाधारणां प्रज्ञां प्रदर्श्य कार्यसाफल्यं प्राप्नुवन्ति। गृहे कल्याणादिशुभयोगाः दृश्यन्ते। उद्योग-व्यापारकर्तृणामपि उत्तरोत्तरं वृद्धिः जायते।।

तुला राशिः



वर्षारम्भे अनुकूलस्थितयः वर्तन्ते। आयापेक्षया अधिकव्ययः दृश्यते। विद्यार्थिनां पठने उत्साहाभावः तथैव व्यर्थसम्भाषणेन कालक्षेपः। दुर्जनसाङ्गत्यहेतुना क्लेशसम्भवः। तस्मात् जागरूकतया भवितव्यम्। सङ्कल्पितकार्येषु विशेषपरिश्रमेणैव फलप्राप्तिर्जायते। सुब्रह्मण्याराधनं मङ्गलमातनोति।।

वृषभ राशिः



आर्थिकविषयेषु अनुकूलता दृश्यते। सङ्कल्पितकार्येषु सफलता लभ्यते। बहुकालात् स्थगितकार्येषु पुरोगमनं वर्तते। क्रमेण आरोग्यवृद्धिः भवति। प्राक्तनमित्रैस्सह मेलनाय अवकाशो विद्यते। धर्माचरणमनस्कास्सन् अध्यात्मिककार्येषु भागस्वामिनः भवन्ति। बन्धु-सन्तानसौख्यं विद्यते।।

वृश्चिक राशिः



सन्तानविषये शुभपरिणामाः विद्यन्ते। बन्धुसुखं, सन्मित्रलाभः, सङ्कल्पितकार्यसिद्धिः। वर्षार्धे स्वल्पस्वास्थ्यक्लेशाः। परोपकारेण यशः प्राप्तिः। विवाहादिशुभयोगेषु प्रतिबन्धकदोषाः निवर्तन्ते। निरुद्योगिनाम् उद्योगप्राप्तिः दृश्यते।।

मिथुन राशिः



आर्थिकक्लेशानां परिष्कारः लभ्यते। आरोग्यविषये जागरूकतया भवितव्यम्। वर्षस्य उत्तरार्धे कृतकर्मसु वृद्धिर्दृश्यते। धैर्येण युक्त्या बुद्ध्या स्वशक्त्या च कृतपरिश्रमः सफलतां प्राप्नोति। मृष्टान्नभोजनम् वस्त्रपुष्पमालिकादि-शुभयोगवशात् समाजे यशोवृद्धिः जायते।।

धनू राशिः



अधिकारिणां राजकीयपदोन्नतिः दृश्यते। निष्कारणकलहाः भवन्ति तस्मात् सावधानाः भवेयुः।कार्येषु अन्तरायाः। छात्राः सृजनात्मकशक्त्या नैपुण्याभिवृद्धिं सम्पाद्य उन्नतशिखरान् अधिगच्छन्ति। एवञ्च आध्यात्मिकविकासः। वर्षारम्भे स्वल्पकालिक आरोग्यक्लेशाः।।

कर्काटक राशिः



अधिकारवृद्धिः कार्यदीक्षा च पूर्वकालापेक्षया उत्तमफलितानि यच्छति। वृत्तिपरकविषयेषु व्ययम् अपाकर्तुं सत्सम्प्रदायेन कुलदेवताराधनं करणीयम्। वैवाहिकक्लेशानां निवर्तनाय संयमनम् अपेक्षते। वर्षस्य उत्तरार्धे मानसिकक्लेशाः शमिताः भवन्ति।।

मकर राशिः



वृत्ति-उद्योगविषयेषु स्वल्पप्रतिबन्धकाः सन्ति चेदपि धैर्येण सश्रद्धं कार्यरता भूत्वा अधिकारिणां प्रशंसाः प्राप्नुवन्ति। सत्सङ्गत्वेन स्नेहबलेन च समाजे यशोवृद्धिः। वर्तकानाम् अनुकूलः कालः। पूर्वापेक्षया व्यापाराभिवृद्धिः। साम्प्रदायव्यापारपद्धतीनाम् अपेक्षया अन्तर्जालिकपद्धतयः शोभन्ते। भूविक्रेतृणां कृते धनलाभः सूच्यते।।

सिंह राशिः



सङ्कल्पितव्यवहारेषु विजयो लभ्यते। ज्येष्ठान् प्रपूज्य इतरैस्सह यथानुकूलं व्यवहरन्ति। व्यर्थप्रसङ्गाः न उपयुज्यन्ते। अष्टमस्थाने गुरुसंचारः दोषप्रदोऽपि मूर्तिमत्त्वात् गुरुः शुभफलानि प्रदाय आयुर्वृद्धिं भाग्यवृद्धिश्च करोति। विद्यासम्बन्धि-अवरोधाः वर्षस्य उत्तरार्धे क्रमेऽपि क्षीयन्ते। स्वास्थ्यविषये जागरूकता अपेक्षिता।।

कुम्भ राशिः



कुम्भराशिजातानां कृते कीर्तिवृद्धिः, मनस्सौख्यं, धनवृद्धिः च भवति। धर्म -पुण्यकार्येषु धनव्ययं कुर्वन्ति। विद्यार्थिनः बुद्धिकुशलतया ज्ञापकशक्त्या च अभिवृद्धिं सम्पादयन्ति। उद्योगिभिः अधिकश्रमः तथैव अधिकारपीडा च अनुभूयते। आत्मविश्वासः वर्धते।।

कन्या राशिः



समाजे उत्तमैस्सह मित्रत्वम् अनुकूलदायकं भवति। दम्पत्योः सत्सम्बन्धवशात् उन्नतजीवनशैलीम् अनुसरन्ति। कार्यक्षेत्रे प्रतिकूलस्थितयः विद्यमानाः अपि स्वकीयपरिश्रमेण यथानुकूलं परिवर्तयन्ति। चैत्रमासानन्तरं स्थानचलनं, तद्वशात् कार्यसफलता दृश्यते। विवाहादि-शुभयोगानां कृते अतीव योग्यः कालः।।

मीन राशिः



वर्षेऽस्मिन् शुभपरिणामाः दृश्यन्ते। समास्यापरिष्करणाय सम्यक् विचार्य योग्यनिर्णयान् स्वीकुर्वन्ति। सहोद्योगिनां कृते प्रेरणां दत्वा संस्थायाः अभ्युपगतये प्रयतन्ते। सांस्कृतिककार्यकलापेषु भागं गृह्णन्ति। स्त्रीपुत्रसुखवर्धनं, मनोनिर्मलता, इष्टार्थसिद्धिश्च जायते।।




# श्रीरामाङ्घ्रिदासः श्रीकुलशेखरसूरिः

- डा. डी.दयानाथः

चरवाणी - ९४१९२९५८४१

तस्मादभूत् चेरकुलप्रदीपः श्रीकौस्तुभात्मा कुलशेखराख्यः। महीपतिर्माघपुनर्वसूद्यद् दिने हरेः पूर्णकटाक्षलक्ष्यः।। इति।



अस्य कलियुगस्य प्रारम्भसमये लब्धजन्मा विशिष्टाद्वैतसम्प्रदायशेखरः श्रीकुलशेखरदिव्यसूरिरासीत्। आसीद्दक्षिणभारते तिरुविताङ्कूर् इत्यपरनामकं चेरराज्यम्। तस्य राजस्य राजधानी तिरुवनन्तपुरम् इति आसीत्। तत्रैव अस्ति भगवतः श्रीपद्मनाभस्य दिव्यमन्दिरम्। राज्यस्यास्य राजानः आत्मानं 'पद्मनाभदासः' इति कथनेन गौरवमनुभवन्ति। तत्रत्यराजवंशाः पद्मनाभदासत्वेन राज्यं परिपालयन्ति। तस्मिन्नेव राजकुले माघमासे पुनर्वसुनक्षत्रे राज्ञः कुलशेखरस्य जन्म अभवत्। भगवतः श्रीरामस्य चरित्रेण प्रभावितः अयं पौनःपुन्येन सर्वदा रम्यां रामायणकथां शृणोति स्म। राजा कुलशेखरः रामस्य दुःखे दुःखं, हर्षे हर्षमनुभवति स्म। एकदा रामकथायाः श्रवणसमये कथावाचकः रामायणस्य- चतुर्दश सहस्राणि ....... भविष्यति।। (वा.रा.३.२४.२३) इति श्लोकस्य व्याख्यानसमये श्रीरामः एकाकी धर्मयोद्धा आसीत् किन्तु पुरतः घोरकर्माणः राक्षसाः चतुर्दश सहस्रसंख्याकाः आसन्। कथं वा तेषां युद्धं भवति? कः खलु रामस्य सहायको भवतीति कथां श्रावितवान् कथावाचकः। तदानीं श्रोतृगणे उपस्थितः कुलशेखरः सहसा उत्थाय 'तत्क्षणमेवाहं मम सैन्येन सह श्रीरामस्य सहायार्थं गमिष्यामि' इत्यवदत्। ततः स्वसैन्यं युद्धाय प्रस्थातुमदिष्टवान्। सर्वेऽपि सैनिकाः आश्चर्यचकिताः अभवन्, यतः इदानीं तु अस्माकं न कोऽपि शत्रुरस्ति। तर्हि केन सह युद्धं करणीयम् इति। तदा मन्त्रिणः रामकथाश्रवणेन आत्मानं तस्मिन् निमज्ज्य रामकथासमयं वर्तमानसमयञ्च विस्मृत्य युद्धाय उद्युक्तोऽस्माकं राजा कुलशेखरः इत्यवगतवन्तः। ईदृशी खलु आसीद् राज्ञः कुलशेखरस्य भगवद्भक्तिः। ततः कथावाचकः मन्त्रिणः च रामः एकाकी एव सर्वानपि राक्षसान् हतवान् इति श्रावितवन्तः। तत् श्रुत्वा अतीव हृष्टमनाः अभवत् कुलशेखरः।

राजभवने सर्वदा विष्णुभक्तानां सम्मर्दः भवति स्म। कुलशेखरः विष्णौ तद्भक्तेषु च अभेदेन भक्तिमकरोत्। भगवद्भक्तान् सः सर्वदा पूजयति स्म। राजभवने राज्ञः उपरि साधूनां विष्णुभक्तानां प्रभावम् असहमानाः मन्त्रिणः एकदा भवनस्थश्रीरामविग्रहस्य एकां रत्नमालां छद्मरूपेण गोपितवन्तः। पूजासमये सर्वे रत्नमालायाः अदर्शनेन स्तम्भिताः अभवन्। सर्वत्र रत्नमालामन्विष्टवन्तः। तदा मन्त्रिणः कुलशेखरम् अवदन् यत् भवनस्थभक्तेष्वेव कश्चित् रत्नमालां चोरितवानिति। तदा कुलशेखरः एकस्मिन् घटे सर्पं निवेश्य तदन्तः स्वहस्तं संस्थाप्य उक्तवान् यदि विष्णुभक्ताः निर्दोषाः रत्नमालायाः चौर्यं न कृतवन्तः तर्हि घटस्थः एष सर्पः मां न दंशेत् इति। घटस्थसर्पः कुलशेखरस्य हस्ते स्वफणां प्रसार्य अतिष्ठत्, किन्तु दंशनं नाकरोत्। एतेन सर्वे ज्ञातवन्तः यद् विष्णुभक्ताः निष्पापाः सन्ति, एभिः चौर्यं न कृतमिति। एतेन कुलशेखरसूरेः विष्णुभक्तान् प्रति दृढभक्तिं ज्ञातुं शक्यते। सः विष्णुभक्तानाम् अपमानं सर्वथा न सहते स्म। एतदर्थं स्वकीयप्राणानपि



अविगणय्य तेषामपख्यातिम् अपसारितवान्। ईदृशी खलु भक्तिर्भागवतोत्तमान् प्रति कुलशेखरस्य।

एकदा रामायणकथाप्रसङ्गे अपरः कश्चन कथाकारः कुलशेखरस्य भक्तिमविज्ञाय सीताहरणघट्टं साङ्गोपाङ्गं विस्तारेण वर्णितवान्। सीताहरणसमये 'हे राम, लक्ष्मणेति समाह्वयन्तीं सीतां रक्षितुं नासीत् तत्र कोऽपि' इति श्रुत्वा सहसा उत्थाय स्वसैन्यसहितः कुलशेखरः समुद्रे अवतीर्य सीतारक्षणाय प्रवृत्तोऽभवत्। तदा श्रीसीतारामः कुलशेखरस्य पुरतः प्रकटो भूत्वा 'हे भक्तकुलश्रेष्ठ कुलशेखर! रावणस्य वधो जातः, एषोऽहमस्मि रामः सीतया सहितः' इत्युक्त्वा समुद्रादुद्धृतवान्। न केवलं लवणसमुद्रादपि तु संसारसागरादपि कुलशेखरस्य समुद्धरणमकरोत् श्रीरामः इति भाव्यते।

भूलोकवैकुण्ठ इति ख्याते श्रीरङ्गक्षेत्रे शयानं भक्तनयनाभिराममानन्दकन्दं ज्ञानानन्दैकस्वरूपं भगवन्तं श्रीरङ्गनाथं सेवितुं कृतनिश्चयोऽभवत् कुलशेखरः। श्रीरङ्गक्षेत्रे श्रीरङ्गनाथदर्शनवैभवमनुभवन् कञ्चित् कालं तत्र निवासमकरोत्। ततः तिरुमल, श्रीचित्रकूटः, कण्णपुरम् इत्यादिदिव्यक्षेत्रेष्वपि भगवत्सेवया आत्मानन्दमनुभूतवान्। यात्रासमये तत्तत् क्षेत्रेषु दिव्यमूर्तीनां महिमानं तमिलभाषया गीतवान्। तदेव इदानीं 'पेरुमाळ् तिरुमोळि' इति नाम्ना व्यवह्रियते। संस्कृतभाषया अपरस्य 'मुकुन्दमाला' इति ग्रन्थस्यापि प्रणयनमकरोत्।

कुलशेखरस्य कृतिद्वये अन्यतरा कृतिः 'पेरुमाळ् तिरुमोळि' इति नाम्ना विख्याता अस्ति। अत्र १०५ तमिलपद्यानि सन्ति। प्रथमद्वितीतृतीयदशकेषु श्रीरङ्गनाथस्य दिव्यवैभवं वर्णयन् तद्दर्शनाय स्पृहयति। अपि च ग्रन्थेऽस्मिन् 'इरुळिरिय' इति प्रारब्धे प्रथमदशके कुलशेखरः भगवतः प्रत्यङ्गदर्शनेन आनन्दमनुभवन् पद्यानि लिखितवान्। द्वितीयदशके 'तेट्टरुन्तिरळ्' इत्यारभ्य भागवतानां महिमा समुपवर्णितः। तृतीयचतुर्थदशकयोः इहलोके भक्तिहीनसंसारस्य असारत्वं, तथाविधसंसाराद् स्वस्य अरुचित्वं च प्रदर्शितवान्। पञ्चमे 'तरुदुयरन्ततडायेल्' इति नामके दशके स्वस्य रक्षकः परमात्मा एक एवेति दर्शयति। षष्ठे 'एर् मलर्पूङ्गुळल्' इति दशके गोपीरूपेण आत्मानं विभाव्य श्रीकृष्णं स्तौति। सप्तमे 'आलै नीळ् करुम्बु' इति दशके श्रीकृष्णस्य जननी देवकीत्वेनात्मानं विभाव्य रोदिति यत् बाल्ये कृष्णस्य बाललीला मया कारागारवासेन नानुभूतेति। सर्वमपि खलु यशोदा प्राप्नोदिति। अष्टमे 'मन्नु पुगळ्' इति दशके श्रीकृष्णावतारे अप्राप्तं स्वपुत्रलालनजन्यानन्दं श्रीरामवतारे शिशोः श्रीरामस्य परिपालनव्याजेन स्वापिकागानरूपेण अनुभवति। नवमे 'वन् ताळिनै' इति दशके श्रीरामस्य वनवासप्रेषणात्परं पुत्रं विचिन्त्य पुत्रशोकेन संतप्यमानस्य महाराजस्य दशरथस्य वेदनां पद्येषु निबध्नाति। अतीव भावपूर्णः इदं दशकम्। दशमे 'वन् ताळिनिनै' इति दशके श्रीरामस्य जन्मन आरभ्य अवतारसमाप्तिं यावत् सम्पूर्णा पुण्यरामायणगाथा वर्णिता।

तिरुमलक्षेत्रे श्रीश्रीनिवासस्य दिव्यार्चामूर्तिसौन्दर्ये कुलशेखरः आत्मानं व्यस्मरत्, हे सर्वपापहर, श्रीवेङ्कटेश, यस्मिन् मन्दिरे देवाधिदेवाः महर्षयः, सूरिणः, सर्वे तव दर्शनाय प्रतीक्षारताः भवन्ति तस्मिन् मन्दिरे तव पुरतः सोपानरूपेण अहं भूत्वा त्वत्प्रवालोपममधरोष्ठं सर्वदा पश्येयमिति। ईदृशी भक्तिरासीत् श्रीमतः कुलशेखरस्य। द्वादश आळ्वार् मध्ये अस्यैव नाम्नः अन्ते 'पेरुमाळ्' इति पदं युज्यते। कुलशेखरपेरुमाळ् (कुलशेखरभगवान्) इत्याख्यानेनैव ज्ञायते यदस्य भक्तिः कीदृशी स्यादिति। अतः यदापि वयं भगवतः दर्शनं कुर्मः तदा तदा भक्तकुलशेखरं श्रीकुलशेखसूरिमपि मनसा स्मृत्वा भगवतः श्रीपद्मावतीनायिकासमेतश्रीश्रीनिवासस्य कृपया मुक्तिं प्राप्नुमः।





# साध्वीमतल्लिका सीता

- डा. सीहेच्.नागराजः
चरवाणी - ८०९९८४९९०६

एकैश्वर्ये स्थितोऽपि प्रणतबहुफले यस्स्वयं कृत्तिवासाः
कान्तासम्मिश्रदेहोऽप्यविषयमनसां यः परस्ताद्यतीनाम्।
अष्टाभिर्यस्य कृत्स्नं जगदपि तनुभिर्बिभ्रतो नाभिमानः
सन्मार्गालोकनाय व्यपनयतु स वस्तामसीं वृत्तिमीशः॥
(विक्रमौर्वशीयमङ्गलाचरणम्)

परमपावनदिव्यचरितायाः वेदवेदाङ्गशास्त्रादिनिष्णातायाः निजपूतकर्मभिः लोकान् समस्तानपि पावयन्त्याः रघुकुलसौभाग्यसीमन्तिन्याः भगवतो महाराजस्य श्रीमद्रामभद्रस्य अनपायनित्यसाहचर्यसाक्षिण्याः प्राणदयितायाः वृद्धाभिजनविद्वदुपचर्याकैङ्कर्यपरमायाः दीनजनोद्धरणशीलायाः तत्र भवत्याः भगवत्याः मैथिलगोत्राभिजातायाः जनकनरपतिहृदयकुमुदिनीचन्द्रिकायाः जगन्मातुः सीतादेव्याः रामायणे वाल्मीकिकथितं दिव्यचरितमांशिंकमत्र यथामति अधीत्य परिपूतान्तरङ्गाः स्याम।

**पत्या सह वनगमनवृत्तान्तः -**

रघुरामेण आत्मवल्लभेन पितुर्निदेशात् वनगमनायोद्यतेन बहुधा निवार्यमानापि जनकनन्दिनी पतिमात्मनीनैः सहेतुकैः ईषदिव परुषैरपि प्रकृतिसरलैः वचनैरेवं सहगमनानुमतिं प्रति अभिमुखीचकार।

ये त्वया कीर्तिता दोषा वने वस्तव्यतां प्रति।
गुणानित्येव तान् विद्धि तव स्नेहपुरस्कृतान्॥२९-२॥
न च मां त्वत्समीपस्थामपि शक्नोति राघव!
सुराणामीश्वरः शक्रः प्रधर्षयितुमोजसा ॥२९-६॥
वनवासेऽभिजानामि दुःखानि बहुधा किल।
प्राप्स्यन्ते नियतं वीर! पुरुषैरकृतात्मभिः॥२९-१२॥
भक्तां पतिव्रतां दीनां मां समां सुखदुःखयोः।
नेतुमर्हसि काकुत्स्थ! समानसुखदुःखिनीम्॥
किं हि कृत्वा विषण्णस्त्वं कुतो वा भयमस्ति ते।
यत्परित्यक्तुकामस्त्वं मामनन्यपरायणाम्॥३०-५॥
कुशकाशशरेषीका ये च कण्टकिनो द्रुमाः।
तूलाजिनसमस्पर्शाः मार्गे मम सह त्वया॥३०-१२॥
(वा.रा.अ.का.)

इत्येवंविधैः बहुविधैः प्रार्थनवचनैः बहुधा निवारयन्तमपि रामचन्द्रं सहवनगमनाय अनुज्ञां प्रदातुं विवशं चकार तत्र मैथिली।

सा हि सृष्टानवद्याङ्गि! वनाय मदिरेक्षणे।
अनुगच्छस्व मां भीरु! सहधर्मचरी भव ॥३०-४०॥
सर्वथा सदृशं सीते मम स्वस्य कुलस्य च।
व्यवसायमतिक्रान्ता कान्ते! त्वमतिशोभनम्॥३०-४१॥

एवं रामेण सह वनगमनाय कृताभ्यनुज्ञा माता सीता आत्मनः पातिव्रत्यधर्मानुष्ठानाय सर्वथा अप्रतीपं विधिमीक्षमाणा सा अन्तर्मनसि इत्थं तुतोष।

ततः प्रहृष्टा प्रतिपूर्णमानसा
यशस्विनी भर्तुरवेक्ष्य भाषितम्।
धनानि रत्नानि च दातुमङ्गना
प्रचक्रमे धर्मभृतां मनस्विनी॥३०-४७॥

अनसूयादेव्याः सीतां प्रति पातिव्रत्यधर्मोपदेशः -

धर्मचारिण्या सीतादेव्या प्रणम्यमाना अत्रिमहर्षेः धर्मपत्नी माता अनसूया प्रसीदन्ती पातिव्रत्यधर्मान् जानकीं प्रति मृदुवचनैः इत्थम् उपदिदेश।

वत्से! मैथिलि! अपि त्वं पातिव्रत्यानुष्ठानाय नियतमनस्का वर्तसे खलु? अप्यात्मनः सर्वैरपि चेष्टितैः पितृश्वशुरकुलयोरुभयोरपि कीर्तिं वर्धयसे खलु? अपि निजधनं वैभवं च तृणाय मत्वा वनवासिनं रामभद्रं निष्ठाञ्चितेन चेतसा सेवसे खलु? एवम् अनेकविधान् कुशलप्रश्नान् कृत्वा सा इत्थम् अग्रे जगाद।

नगरस्थो वनस्थो वा पापो वा यदि वा शुभः।
यासां स्त्रीणां प्रियो भर्ता तासां लोका महोदयाः॥
दुश्शीलः कामवृत्तो वा धनैर्वा परिवर्जितः।
स्त्रीणाम् आर्यस्वभावानां परमं दैवतं पतिः॥
(अयो, ११७-२१-२२)

नागरिको वा वनचरो वा पापचरितो वा शुभलक्षणो वा भर्ता यासां वनितानां प्रियो भवति, तासां सर्वेऽपि लोकाः अभ्युदयिनो भवन्ति। नाम



पतिसहवासेन योषितः सर्वेषु लोकेषु सर्वासु अवस्थासु च सुरक्षिताः योगक्षेमवत्यो भवन्ति।

एवमेव शीलेन दुष्टः, कामुकः, निर्धनः पतिरपि आर्यप्रकृतीनां योषितां साक्षात् दैवतमेवेति मन्तव्यः।

तदेवमेनं त्वनुव्रता सती
पतिव्रतानां समयानुवर्तिनी।
भवस्व भर्तुः सहधर्मचारिणी
यशश्च धर्मं च ततः समाप्स्यसि।।
।।११७-२७।।

सकलकल्याणगुणाभिरामं चन्द्रमिव लोकैरत्यन्तम् आद्रियमानं महानुभावं रघुवरं श्रीरामभद्रं पतिं प्राप्य त्वमिहापरत्र सर्वतोऽपि धन्या संवृत्तासि। अतः पतिव्रतानां चरितम् अनुवर्तमाना परमदैवतं पतिम् उपचरन्ती सतीधर्मानुष्ठात्री त्वं महान्तं धर्मलाभं यशःफलं च शश्वदवाप्स्यसि इति सीतामातरम् उद्दिश्य भगवत्या अनसूयया समुदीरिताः आशीर्वाचः इमाः।

**माता मैथिली अपि सन्ध्यामुपास्त -**

लोकपावनी माता श्रीरामदयिता जानकी अपि सन्ध्यामुपास्त इति ईदृशाः उल्लेखाः रामायणे उपलभ्यन्ते। सुन्दरकाण्डे महाधीमान् हनुमान् यदा सीतादेवीं विचिन्वन् अशोकवाटिकाम् आससाद, तदा माता जानकी यदि जीविता स्यात्, तर्हि अवश्यं सन्ध्याम् उपास्तुं नदीकूलम् आगमिष्यति इति अतर्कयत्।

सन्ध्याकालमनाः श्यामा ध्रुवमेष्यति जानकी।
नदीं चेमां शुभजलां सन्ध्यार्थे वरवर्णिनी।।
यदि जीवति सा देवी ताराधिपनिभानना।
आगमिष्यति सावश्यमिमां शीतजलां नदीम्।।
(सु.१४.-४९,५१)

अनेन प्रमाणेन इदं सुनिश्चीयते यत् रामायणकाले पुरुषैः समं स्त्रियोऽपि सन्ध्यामुपासत इति।

**रावणसम्मुखेऽपि धीरा -**

राक्षसीपरिवृतेन प्रकृत्या नीचेन क्रूरेण रक्षसा रावणेन बहुधा वचनैः चेष्टितैश्च हिंस्यमानापि जानकी भर्तारं रामभद्रं परमदैवतं मन्वाना धीरा सती तमपि पौलस्त्यम् अभित एव इत्थं स्वनिश्चितं प्राकटयत्।

इक्ष्वाकूणां कुले जातः सिंहस्कन्धो महाद्युतिः।
लक्ष्मणेन सह भ्रात्रा यस्ते प्राणान् हरिष्यति।।४।।
य एते राक्षसाः प्रोक्ताः घोररूपा महाबलाः।
राघवे निर्विषास्सर्वे सुपर्णे पन्नगा इव।।६।।
तस्य ज्याविप्रमुक्तास्ते शराः काञ्चनभूषणाः।
शरीरं विधमिष्यन्ति गङ्गाकूलमिवोर्मयः।।७।।
स ते जीवितशेषस्य राघवोऽन्तकरो बली।
पशोर्यूपगतस्येव जीवितं तव दुर्लभम्।।९।।
गतायुस्त्वं गतश्रीको गतसत्त्वो गतेन्द्रियः।
लङ्का वैधव्यसंयुक्ता त्वत्कृतेन भविष्यति।।१२।।
(अरण्य. सर्गः- ५६)

एवम् अकालतडित्संहतिरिव महाकालस्य प्रलयघण्टिकेव कल्पमुपसंहर्तुमुद्यता हुताशनशिखेव गर्जन्ती नयनरोचिषा दिधक्षन्ती सा महामङ्गला भगवती वैदेही तं राक्षसाधमं तस्मिन्नेव क्षणे सञ्जहारेति ओजस्स्फूर्तिम् अस्मासु नियच्छति प्रकरणमिदम्।

**सीतारामयोः परस्परानुरूपत्वम् -**

अशोकवाटिकायां शोकपरायणां नित्यं रामैकजीवितां भगवतीं जनकात्मजां विलोक्य, तस्यै रामसन्देशं श्रावयित्वा, तां सान्त्वयित्वा प्रियाकुशलवार्तां तदीयसन्देशं च रामभद्राय निवेदयितुं समागतो हनुमान् राममुद्दिश्य सीतादेव्याः शोकावस्थां पुनरुभयोरपि सहजानुरूप्यं वर्णयन् इत्थमाह।

मान्या गुरुविनीतस्य लक्ष्मणस्य गुरुप्रिया।
यदि सीतापि दुःखार्ता कालो हि दुरतिक्रमः।।३।।
तुल्यशीलवयोवृत्तां तुल्याभिजनलक्षणाम्।
राघवोऽर्हति वैदेहीं तं चेयमसितेक्षणा।।५।।
(सुन्दर.१६सर्गः)

लक्ष्मणाग्रजस्य गुरुजनसेवानिरतान्तरङ्गस्य रघुकुलतिलकस्य श्रीरामचन्द्रस्य प्राणदयिता यदि सीतापि दुःखसमाकुला, तर्हि कालः खलु नितान्तम् अनुल्लङ्घनीयः। सर्वथा श्रीरामभद्रेण सम्मितस्वभावा अनुरूपवयस्का सदृशकुलाचारविभवा सती भगवती जनकराजदुहिता रामं प्राप्तुं सर्वात्मना क्षमा, पुनश्च तां महोदयामाप्तुमपि सर्वात्मना रामोऽपि क्षमः। अतस्तयोरेव दाम्पत्यं लोकस्य समस्तमाङ्गल्यविधायकमिति सत्यम्।।





चित्रकथा

# श्रीरामपदसेवकः

तेलुगु मूलम् - डा.कंपल्ले रविचन्द्रन्
चित्राणि - तुम्बलि शिवाजी
संस्कृतानुवादः - श्री जोषि भरद्वाजः
चरवाणी - ९९१२६५९७०७








































सहस्रकोटियुगधारिणे नमः।।





अस्य चित्रपटस्य रञ्जनं कुर्मः वा?

प्रदत्तं चित्रपटम् अधोनिर्दिष्टप्रदेशे स्थापयामो वा?

## चित्रलेखनम्





## रसप्रश्नाः

१. दशरथस्य आन्तरङ्गिकः अमात्यः कः?

अ. वासुकिः आ. सुमन्त्रः

इ. सुग्रीवः ई. सुबन्धुः

२.अयोध्यानगरी कस्याः नद्याः तीरे वर्तते?

अ. सरयू आ. विपाट्

इ. सिन्धू ई. गङ्गा

३. देवेन्द्रस्य अंशेन कः जनिमवाप?

अ. भरतः आ. शत्रुघ्नः

इ. सुग्रीवः ई. वाली

४. भरतस्य माता का?

अ. कैकेयी आ. सुमित्रा

इ. कौसल्या ई. मन्थरा

समाधानानि - १. आ २. अ ३. ई ४. अ

सप्तभेदाः कुत्र?

Printed by Sri P. Ramaraju, M.A., and Published by Dr. K. Radha Ramana, M.A., M.Phil., Phd., on behalf of Tirumala Tirupati Devasthanams and Printed and Publised at Tirumala Tirupati Devasthanams Press, K.T. Road,Tirupati 517 507.
Editor : Dr.V.G. Chokkalingam, M.A., Ph.D.

## दि. ०८.०२.२०२२ 'रथसप्तमी' सन्दर्भे तिरुमलक्षेत्रे विविधवाहनेषु आरूढस्य श्रीमलयप्पस्वामिनः दृश्यमालिका।



















SAPTHAGIRI (SANSKRIT) ILLUSTRATED MONTHLY PUBLISHED BY TIRUMALA TIRUPATI DEVASTHANAMS
PRINTING ON 25-03-2022 & posting at Tirupati RMS Regd.with the Registrar of Newspapers for India under RNI No.21138/1970 Postal Regd. No. TRP/154/2021-2023"
LICENCED TO POST WITHOUT PREPAYMENT No.PMGK/RNP/WPP-04(4)/2021-2023"
Posting on 5th of every month.

वराङ्कुशौ पाशमभीतिमुद्राम्
करैर्वहन्तीं कमलासनस्थाम्।
बालार्ककोटिप्रतिभां त्रिनेत्राम्
भजेऽहमम्बां जगदीश्वरीं ताम्॥

(श्रीसूक्तम्)

SIVAPRASAD